श्रीसुदर्शनचक्रस्तोत्रम् अथवा सुदर्शनपूजाविधिः
रुद्र उवाच ।
सुदर्शनस्य पूजां मे वद शङ्खगदाधर ।
ग्रहरोगादिकं सर्वं यत्कृत्वा नाशमेति वै ॥ १॥

हरिरुवाच ।
सुदर्शनस्य चक्रस्य शृणु पूजां वृषध्वज ।
स्नानमादौ प्रकुर्वीत पूजयेच्च हरिं ततः ॥ २॥

मूलमन्त्रेण वै न्यासं मूलमन्त्रं शृणुष्व च ।
सहस्रारं हुं फट् नमो मन्त्रः प्रणवपूर्वकः ॥ ३॥

कथितः सर्वदुष्टानां नाशको मन्त्रभेदकः ।
ध्यायेत्सुदर्शनं देवं हृदि पद्मेऽमले शुभे ॥ ४॥

शङ्खचक्रगदापद्मधरं सौम्यं किरीटिनम् ।
आवाह्य मण्डले देवं पूर्वोक्तविधिना हर ॥ ५॥

पूजयेद्गन्धपुष्पाद्यैरुपचारैर्महेश्वर ।
पूजयित्वा जपेन्मन्त्रं शतमष्टोत्तरं नरः ॥ ६॥

एवं यः कुरुते रुद्र  चक्रस्यार्चनमुत्तमम् ।
सर्वरोगविनिर्मुक्तो विष्णुलोकं समाप्नुयात् ॥ ७॥

एतत्स्तोत्रं जपेत्पश्चात्सर्वव्याधिविनाशनम् ।
अथ स्तोत्रम् ।
नमः सुदर्शनायैव सहस्रादित्यवर्चसे ॥ ८॥

ज्वालामालाप्रदीप्ताय सहस्राराय चक्षुषे ।
सर्वदुष्टविनाशाय सर्वपातकमर्दिने ॥ ९॥

सुचक्राय विचक्राय सर्वमन्त्रविभेदिने ।
प्रसवित्रे जगद्धात्रे जगद्विध्वंसिने नमः ॥ १०॥

पालनार्थाय लोकानां दुष्टासुरविनाशिने ।
उग्राय चैव सौम्याय चण्डाय च नमो नमः ॥ ११॥

नमश्चक्षुःस्वरूपाय संसारभयभेदिने ।

मायापञ्जरभेत्रे च शिवाय च नमो नमः ॥ १२॥

ग्रहातिग्रहरूपाय ग्रहाणां पतेय नमः ।
कालाय मृत्यवे चैव भीमाय च नमो नमः ॥ १३॥

भक्तानुग्रहदात्रे च भक्तगोप्त्रे नमो नमः ।
विष्णुरूपाय शान्ताय चायुधानां धराय च ॥ १४॥

विष्णुशस्त्राय चक्राय नमो भूयो नमो नमः ।
इति स्तोत्रं महापुण्यं चक्रस्य तव कीर्तितम् ॥ १५॥

यः पठेत्परया भक्त्या विष्णुलोकं स गच्छति ।
चक्रपूजाविधिं यश्च पठेद्रुद्र जितोन्द्रियः ।
स पापं भस्मसात्कृत्वा विष्णुलोकाय कल्पते ॥ १६॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे
सुदर्शनपूजाविधिर्नाम त्रयस्त्रिंशोऽध्यायः सम्पूर्णः ।